# श्रीमहाराज्ञीसहस्रनामस्तोत्रम्

## अथवा श्रीमहाराज्ञी राजराजेश्वरीसहस्रनामस्तोत्रम्

पार्वत्युवाच -

भगवन् वेदतत्त्वज्ञ मन्त्रतन्त्रविचक्षण ।
शरण्य सर्वलोकेश शरणागतवत्सल ॥ १॥

कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक् ।
मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि ॥ २॥

श्रीशिव उवाच -

या देवी निष्कला राज्ञी भगवत्यमलेश्वरी ।
सा सृजत्यवति व्यक्तं संहरिष्यति तामसी ॥ ३॥

तस्या नामसहस्रं ते वक्ष्ये स्नेहेन पार्वति ।
अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम् ॥ ४॥

परमार्थप्रदं नित्यं परमैश्वर्यकारणम् ।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपकम् ॥ ५॥

समस्तशोकशमनं महापातकनाशनम् ।
सर्वमन्त्रमयं दिव्यं राज्ञीनामसहस्रकम् ॥ ६॥

ॐ अस्य श्रीमहाराज्ञी राजराजेश्वरी नामसहस्रस्य ब्रह्मा ऋषिः ।

गायत्री छन्दः । सर्वभूतेश्वरी महाराज्ञी देवता । ह्रीं बीजं ।

सौः शक्तिः । क्लीं कीलकं । श्रीमहाराज्ञीसहस्रनामजपे विनियोगः ।

ॐ ह्रां ह्रीं इत्यादिना कर-हृदयादि न्यासः ।

NOTE: The follwing 5 lines (before · dhyAnaM· are not found in SVR's book

ब्रह्मऋषये नमः शिरसि । गायत्रीच्छन्दसे नमः मुखे ।

श्रीभूतेश्वरीमहाराज्ञीदेवतायै नमः हृदि ।

ह्रींबीजाय नमः नाभौ । सौः शक्तये नमः गुह्ये ।

क्लीं कीलकाय नमः पादयोः । विनियोगाय नमः सर्वाङ्गेषु ।

ॐह्रामित्यादिना करषडङ्गन्यासं विधाय ध्यानं कुर्यात् ।

॥ ध्यानम् ॥

या द्वादशार्कपरिमण्डितमूर्तिरेका

सिंहासनस्थितिमती ह्युरगैर्वृतां च ।

देवीमनन्यगतिरीश्वरतां प्रपन्नां var देवीमनक्षगतिमीश्वरतां

तां नौमि भर्गवपुषीं परमार्थराज्ञीम् ॥ १॥

चतुर्भुजां चन्द्रकलार्धशेखरां सिंहासनस्थामुरगोपवीतिनीम् ।

var सिंहासनस्थां भुजगोपवीतिनीम् पाशाङ्कुशाम्भोरुहखड्गधारिणीं

राज्ञीं भजे चेतसि राज्यदायिनीम् ॥ २॥

ॐ ह्रीं श्रीं रां महाराज्ञी क्लीं सौः पञ्चदशाक्षरी ।
ह्रीं स्वाहा त्र्यक्षरी विद्या परा भगवती विभा ॥ १॥

ॐ भास्वती भद्रिका भीमा भर्गरूपा मनस्विनी ।
माननीया मनीषा च मनोजा च मनोजवा ॥ २॥

मानदा मन्त्रविद्या च महाविद्या षडक्षरी ।
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा ॥ ३॥

शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी ।
महालक्ष्मीर्महोरस्का महौजस्का महोदया ॥ ४॥

मातङ्गी मोदकाहारा मदिरारुणलोचना ।
साध्वी शीलवती शाला सुधाकलशधारिणी ॥ ५॥

खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता ।
हृत्पद्मवासिनी हृद्या पानपात्रधरा परा ॥ ६॥

धराधरेन्द्रतनया दक्षिणा दक्षजा दया । var दशना दया
दयावती महामेधा मोदिनी बोधिनी सदा ॥ ७॥

गदाधरार्चिता गोधा गङ्गा गोदावरी गया ।

महाप्रभावसहिता महोरगविभूषणा ॥ ८॥

महामुनिकृतातिथ्या माध्वी मानवती मघा ।

बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी ॥ ९॥

शारी शरीरमध्यस्था वैखरी खेचरेश्वरी ।

शिवदा शिववक्षःस्था कालिका त्रिपुरेश्वरी ॥ १०॥ var त्रिपुरापुरी

पुरारिकुक्षिमध्यस्था मुरारिहृदयेश्वरी ।

बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी ॥ ११॥

मुण्डमालाञ्चिता मुद्रा क्षोभणाकर्षणक्षमा ।

ब्राह्मी नारायणी देवी कौमारी चापराजिता ॥ १२॥

रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी ।

नारसिंही भैरवेशी भैरवाकारभीषणा ॥ १३॥

नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी ।

नागकङ्कणकेयूरा (१००) नागहारा सुरेश्वरी ॥ १४॥

सुरारिघातिनी पूता पूतना डाकिनी क्रिया ।

कूर्मा क्रियावती कृत्या डाकिनी लाकिनी लया ॥१५॥

var क्रियावती कुरी कृत्या, शाकिनी लया

लीलावती रसाकीर्णा नागकन्या मनोहरा ।

हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी ॥ १६॥

महासिनी मधुमती सरसी स्मरमोहिनी । var प्रहासिनी मधुमती

महोग्रवपुषी वार्ता वामाचारप्रिया सिरा ॥ १७॥

सुधामयी वेणुकरा वैरघ्नी वीरसुन्दरी ।

वारिमध्यस्थिता वामा वामनेत्रा शशिप्रभा ॥ १८॥

शङ्करी शर्मदा सीता रवीन्दुशिखिलोचना ।

मदिरा वारुणी वीणागीतिज्ञा मदिरावती ॥ १९॥

वटस्था वारुणीशक्तिः वटजा वटवासिनी ।

वटुकी वीरसूर्वन्द्या स्तम्भिनी मोहिनी चमूः ॥ २०॥

मुद्गराङ्कुशहस्ता च वराभयकरा कुटी ।

पाटीरद्रुमवल्ली च वटुका वटुकेश्वरी ॥ २१॥

इष्टदा कृषिभूः कीरी रेवती रमणप्रिया ।

रोहिणी रेवती रम्या रमणा रोमहर्षिणी ॥ २२॥

रसोल्लासा रसासारा सारिणी तारिणी तडित् ।

तरी तरित्रहस्ता च तोतुला तरणिप्रभा ॥ २३॥

रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता ।

रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा ॥ २४॥

षड्रसा द्विरसा माला मालाभरणभूषिता ।

मालती मल्लिकामोदा मोदकाहारवल्लभा ॥ २५॥

वल्लभी मधुरा माया काशी काञ्ची ललन्तिका ।

हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका ॥ २६॥

क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा (२००) क्षणेश्वरी ।

क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता ॥ २७॥

क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी ।

कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी ॥ २८॥

कारुण्यार्द्रा च काश्मीरी दूती द्वारवती ध्रुवा । var कारुण्या चैव

ध्रुवस्तुता ध्रुवगतिः पीठेशी बगलामुखी ॥ २९॥

सुमुखी शोभना नीतिः रत्नज्वालामुखी नतिः ।

अलकोज्जयिनी भोग्या भङ्गी भोगावती बला ॥ ३०॥

धर्मराजपुरी पूता पूर्णमालाऽमरावती । var पूर्णसत्त्वाऽमरावती

अयोध्या बोधनीया च युगमाता च यक्षिणी ॥ ३१॥ var योधनीया

यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी ।

यशोवती च चार्वङ्गी चारुहासा चलाचला ॥ ३२॥

हरीश्वरी हरेर्माया भामिनी वायुवेगिनी । var मायिनी वायुवेगिनी

अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः ॥ ३३॥

कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी ।

कठोरवाक्कुहूमूर्तिः चन्द्रबिम्बसमानना ॥ ३४॥

चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी ।

मलयाचलसानुस्था हिमाद्रितनयातनूः ॥ ३५॥

हिमाद्रिकुक्षिदेशस्था कुब्जिका कोसलेश्वरी ।

कारैकनिगला गूढा गूढगुल्फाऽतिवेगिनी ॥ ३६॥ var गूढगुल्फाऽतिगोपिता

तनुजा तनुरूपा च बाणचापधरा नुतिः ।

धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना ॥ ३७॥

अरुणेशी द्युतिः ख्यातिः गरिष्ठा च गरियसी ।

महानसी महाकारा सुरासुरभयङ्करी ॥ ३८॥

अणुरूपा बृहज्ज्योतिरनिरुद्धा सरस्वती ।

श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी ॥ ३९॥

गौर्गण्या गोमयी गुह्या गोमती गरुवाग्रसा ।

गीतसन्तोषसंसक्ता (३००) गृहिणी ग्राहिणी गुहा ॥ ४०॥

गणप्रिया गजगतिर्गान्धारी गन्धमोदिनी । गन्धमोहिनी

गन्धमादनसानुस्था सह्याचलकृतालया ॥ ४१॥

गजाननप्रिया गम्या ग्राहिका ग्राहवाहना ।

गुहप्रसूर्गुहावासा गृहमालाविभूषणा ॥ ४२॥

कौबेरी कुहका भ्रन्तिस्तर्कविद्याप्रियङ्करी ।

पीताम्बरा पटाकारा पताका सृष्टिजा सुधा ॥ ४३॥

दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी ।

ताराचक्रस्थिता तारा तुरी तुर्या त्रुटिस्तुला ॥ ४४॥

सन्ध्यात्रयी सन्धिजरा सन्ध्या तारुण्यलालिता ।

ललिता लोहिता लभ्या चम्पा कम्पाकुला सृणिः ॥ ४९॥

सृतिः सत्यवती स्वस्थाऽसमाना मानवर्धिनी ।
महोमयी मनस्तुष्टिः कामधेनुः सनातनी ॥ ४६॥

सूक्ष्मरूपा सूक्ष्ममुखी स्थूलरूपा कलावती ।
तलातलाश्रया सिन्धुः त्र्यम्बिका लम्पिका जया ॥ ४७॥

सौदामिनी सुधादेवी सनकदिसमर्चिता ।
मन्दाकिनी च यमुना विपाशा नर्मदानदी ॥ ४८॥

गण्डक्यैरावती सिप्रा वितस्ता च सरस्वती ।
रेवा चेक्षुमती वेगवती सागरवासिनी ॥ ४९॥

देवकी देवमाता च देवेशी देवसुन्दरी ।
दैत्येशी दमनी दात्री दितिर्दितिजसुन्दरी ॥ ५०॥ var दैत्यघ्नी

विद्याधरी च विद्येशी विद्याधरजसुन्दरी ।
मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा ॥ ५१॥

उर्वशी मोहिनी रम्भा चाप्सरोगणसुन्दरी ।
यक्षिणी यक्षलोकेशी यक्षनायकसुन्दरी ॥ ५२॥ var नरवाहनपूजिता

NOTE: The next line is not found in SVR's book

यक्षेन्द्रतनया योग्या यक्षनायकसुन्दरी ।

गन्धवत्यर्चिता गन्धा सुगन्धा गीततत्परा ॥ ५३॥

गन्धर्वतनया नम्रा (४००) गीतिर्गन्धर्वसुन्दरी ।

मन्दोदरी करालाक्षी मेघनादवरप्रदा ॥ ५४॥

मेघवाहनसन्तुष्टा मेघमूर्तिश्च राक्षसी ।

रक्षोहर्त्री केकसी च रक्षोनायकसुन्दरी ॥ ५५॥

किन्नरी कम्बुकण्ठी च कलकण्ठस्वनाऽमृता var  कलकण्ठस्वना सुधा

किम्मुखी हयवक्त्रा च खेलाकिन्नरसुन्दरी ॥ ५६॥

विपाशी राजमातङ्गी उच्छिष्टपदसंस्थिता ।

महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी ॥ ५७॥

गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी ।

सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी ॥ ५८॥

भूतेश्वरी भूतलया भूतधात्री भयापहा ।

भूतभीतिहरी भव्या भूतजा भूतसुन्दरी ॥ ५९॥

पृथ्वी पार्थिवलोकेशी प्रथा विष्णुसमर्चिता ।

वसुन्धरा वसुनता पर्थिवी भूमिसुन्दरी ॥ ६०॥

अम्भोधितनयाऽलुब्धा जलजाक्षी जलेश्वरी ।

अमूर्तिरम्मयी मारी जलस्था जलसुन्दरी ॥ ६१॥

तेजस्विनी महोधात्री तैजसी सूर्यबिम्बगा ।

सूर्यकान्तिः सूर्यतेजाः तेजोरूपैकसुन्दरी ॥ ६२॥

वायुवाहा वायुमुखी वायुलोकैकसुन्दरी ।

गगनस्था खेचरेशी शून्यरूपा निराकृतिः ॥ ६३॥ शूररूपा

निराभासा भासमाना धृतिराकाशसुन्दरी ।

क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोकसुन्दरी ॥ ६४॥

अब्धियाना रत्नशोभा वरुणेशी वरायुधा ।

पाशहस्ता पोषणा च वरुणेश्वरसुन्दरी ॥ ६५॥

अनलैकरुचिर्ज्योतिः पञ्चानिलमतिस्थितिः ।

प्राणापानसमानेच्छा चोदानव्यानरूपिणी ॥ ६६॥

पञ्चवातगतिर्नाडीरूपिणी वातसुन्दरी ।

अग्निरूपा वह्निशिखा वडवानलसन्निभा ॥ ६७॥

हेतिर्हविर्हुतज्योतिरग्निजा वह्निसुन्दरी ।

सोमेश्वरी सोमकला सोमपानपरायणा ॥ ६८॥

सौम्यानना सौम्यरूपा सोमस्था सोमसुन्दरी ।
सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी ॥ ६९॥

याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा ।
याजकी यज्ञविद्या च यजमानैकसुन्दरी ॥ ७०॥

आकाशगामिनी वन्द्या शब्दजाऽऽकाशसुन्दरी ।
मीनास्या मीननेत्रा च मीनास्था मीनसुन्दरी ॥ ७१॥

var मीनप्रिया मीननेत्रा मीनाशा मीनसुन्दरी
कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मसुन्दरी । var कूर्मरूपिणी
वाराही वीरसूर्वन्द्या वरारोहा मृगेक्षणा ॥ ७२॥

वराहमूर्तिर्वाचाला वश्या वाराहसुन्दरी । var दंष्ट्रा वाराहसुन्दरी
नरसिंहाकृतिर्देवी दुष्टदैत्यनिषूदिनी ॥ ७३॥

प्रद्युम्नवरदा नारी नरसिंहैकसुन्दरी ।
वामजा वामनाकारा नारायणपरायणा ॥ ७४॥

बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी ।
रामप्रिया रामकला रक्षोवंशक्षयभयङ्करी ॥ ७५॥ रक्षोवंशक्षयङ्करी रक्षोवंशभयङ्करी

var रामप्रिया रामकीलिः क्षत्रवंशक्षयङ्करी

भृगुपुत्री राजकन्या रामा परशुधारिणी । var दनुपुत्री

भार्गवी भार्गवेष्टा च जामदग्न्यवरप्रदा ॥ ७६॥

कुठारधारिणी रात्रिर्जामदग्न्यैकसुन्दरी ।

सीतालक्ष्मणसेव्या च रक्षःकुलविनाशिनी ॥ ७७॥

रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा ।

लावण्यामृतधाराढ्या लवणासुरघातिनी ॥ ७८॥

लोहितास्या प्रसन्नास्या स्वात्मारामैकसुन्दरी । var स्वागमा रामसुन्दरी

कृष्णकेशा कृष्णमुखी यादवान्तकरी लया ॥ ७९॥

यादोगणार्च्चिता योज्या राधा श्रीकृष्णसुन्दरी ।

सिद्धप्रसूः सिद्धदेवी जिनमार्गपरायणा ॥ ८०॥ var बुद्धप्रसूर्बुद्धदेवी

जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया ।

जिनवंशधरोग्रा च नीलान्ता बुद्धसुन्दरी ॥ ८१॥

काली कोलाहलप्रीता प्रेतवाहा सुरेश्वरी ।

कल्किप्रिया कम्बुधरा कलिकालैकसुन्दरी ॥ ८२॥

विष्णुमाया ब्रह्ममाया शाम्भवी शिववाहना ।
इन्द्रावरजवक्षःस्था स्थाणुपत्नी पलालिनी ॥ ८३॥

जृम्भिणी जृम्भहर्त्री च जृम्भमाणालकाकुला । var ऋम्भमाणकचालका
कुलाकुलफलेशानी पददानफलप्रदा ॥ ८४॥

कुलवागीश्वरी कुल्या कुलजा कुलसुन्दरी ।
पुरन्दरेड्या तारुण्यालया पुण्यजनेश्वरी ॥ ८५॥

पुण्योत्साहा पापहन्त्री पाकशासनसुन्दरी ।
सूयर्कोटिप्रतीकाशा सूर्यतेजोमयी मतिः ॥ ८६॥

लेखिनी भ्राजिनी रज्जुरूपिणी सूर्यसुन्दरी ।
चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी ॥ ८७॥

लोलाक्षी च शताक्षी च सहस्राक्षी सहस्रपात् ।
सहस्रशीर्षा चेन्द्राणी सहस्रभुजवल्लिका ॥ ८८॥

कोटिरत्नांशुशोभा च शुभ्रवस्त्रा शतानना ।
शतानन्दा श्रुतिधरा पिङ्गला चोग्रनादिनी ॥ ८९॥

सुषुम्ना हारकेयूरनूपुरारावसङ्कुला ।
घोरनादाऽघोरमुखी चोन्मुखी चोल्मूकायुधा ॥ ९०॥

गोपिता गूर्जरी गोधा गायत्री वेदवल्लभा ।

वल्लकीस्वननादा च नादविद्या नदीतटी ॥ ९१॥

बिन्दुरूपा चक्रयोनिर्बिन्दुनादस्वरूपिणी ।

चक्रेश्वरी भैरवेशी महाभैरववल्लभा ॥ ९२॥

कालभैरवभार्या च कल्पान्ते रङ्गनर्तकी ।

प्रलयानलधूम्राभा योनिमध्यकृतालया ॥ ९३॥

भूचरी खेचरी मुद्रा नवमुद्राविलासिनी ।

वियोगिनी श्मशानस्था श्मशानार्चनतोषिता ॥ ९४॥

भास्वराङ्गी भर्गशिखा भर्गवामाङ्गवासिनी ।

भद्रकाली विश्वकाली श्रीकाली मेघकालिका ॥ ९५॥

नीरकाली कालरात्रिः काली कामेशकालिका ।

इन्द्रकाली पूर्वकाली पश्चिमाम्नायकालिका ॥ ९६॥

श्मशानकालिका शुभ्रकाली श्रीकृष्णकालिका । var भद्रकाली

क्रीङ्कारोत्तरकाली श्रीं हुं ह्रीं दक्षिणकालिका ॥ ९७॥

सुन्दरी त्रिपुरेशानी त्रिकूटा त्रिपुरार्चिता ।

त्रिनेत्रा त्रिपुराध्यक्षा त्रिकूटा कूटभैरवी ॥ ९८॥  var  त्रिपुटा पुटभैरवी

त्रिलोकजननी नेत्री महात्रिपूरसुन्दरी ।

कामेश्वरी कामकला कालकामेशसुन्दरी ॥ ९९॥

त्र्यक्षर्येकाक्षरीदेवी भावना भुवनेश्वरी ।

एकाक्षरी चतुष्कूटा त्रिकूटेशी लयेश्वरी ॥ १००॥

चतुर्वर्णा च वर्णेशी वर्णाढ्या चतुरक्षरी ।

पञ्चाक्षरी च षड्वक्त्रा षट्कूटा च षडक्षरी ॥ १०१॥

सप्ताक्षरी नवार्णेशी परमाष्टाक्षरेश्वरी ।

नवमी पञ्चमी षष्टिः नागेशी नवनायिका ॥ १०२॥  var  नागेशी च नवाक्षरी ।

दशाक्षरी दशास्येशी देविकैकादशाक्षरी ।

द्वादशादित्यसङ्काशा (७००) द्वादशी द्वादशाक्षरी ॥ १०३॥

त्रयोदशी वेदगर्भा वाद्या (ब्राह्मी) त्रयोदशाक्षरी ।

चतुर्दशाक्षरी विद्या विद्यापञ्चदशाक्षरी ॥ १०४॥

षोडशी सर्वविद्येशी महाश्रीषोडशाक्षरी ।

महाश्रीषोडशीरूपा चिन्तामणिमनुप्रिया ॥ १०५॥

द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी ।

वज्रतारा कालतारा नारी तारोग्रतारिणी ॥ १०६॥

कामतारा स्पर्शतारा शब्दतारा रसाश्रया ।

रूपतारा गन्धतारा महानीलसरस्वती ॥ १०७ ॥

कालज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला ।

विष्णुज्वाला जिष्णुशिखा भद्रज्वाला करालिनी ॥ १०८॥ विष्णुशिखा

विकरालमुखी देवी कराली भूतिभूषणा ।

चिताशयासना चिन्त्या चितामण्डलमध्यगा ॥ १०९॥

भूतभैरवसेव्या च भूतभैरवपालिनी ।

बन्धकी बद्धसन्मुद्रा भवबन्धविनाशिनी ॥ ११०॥

भवानी देवदेवेशी दीक्षा दीक्षितपूजिता ।

साधकेशी सिद्धिदात्री साधकानन्दवर्धिनी ॥ १११॥

साधकाश्रयभूता च साधकेष्टफलप्रदा ।

रजोवती राजसी च रजकी च रजस्वला ॥ ११२॥

पुष्पप्रिया पुष्पपूर्णा स्वयम्भूपुष्पमालिका । var पुष्पप्रिया पुष्पवती

स्वयम्भूपुष्पगन्धाढ्या पुलस्त्यसुतनाशिनी ॥ ११३॥ var पुलस्त्यसुतघातिनी

पात्रहस्ता परा पौत्री पीतास्या पीतभूषणा ।

पिङ्गानना पिङ्गकेशी पिङ्गला पिङ्गलेश्वरी ॥ ११४॥

मङ्गला मङ्गलेशानी सर्वमङ्गलमङ्गला ।

पुरूरवेश्वरी पाशधरा चापधराऽधुरा ॥ ११५॥

पुण्यधात्री पुण्यमयी पुण्यलोकनिवासिनी ।

होतृसेव्या हकारस्था सकारस्था सुखावती ॥ ११६॥

सखी शोभावती सत्या सत्याचारपरायणा ।

साध्वीशानकलेशानी वामदेवकलाश्रिता ॥ ११७॥

सद्योजातकलेशानी शिवाऽघोरकलाकृतिः । var सद्योजातकला देवी

शर्वरी वीरसदृशी क्षीरनीरविवेचिनी (८००) ॥ ११८॥

वितर्कनिलया नित्या नित्यक्लिन्ना पराम्बिका ।

पुरारिदयिता दीर्घा दीर्घनासाऽल्पभाषिणी ॥ ११९॥

काशिका कौशिकी कोश्या कोशदा रूपवर्धिनी ।

तुष्टिः पुष्टिः प्रजाप्रीता पूजिता पूजकप्रिया ॥ १२०॥ var प्राजिका पूजकप्रिया

प्रजावती गर्भवती गर्भपोषणकारिणी । var गर्भपोषणपोषिता

शुक्रवासाः शुक्लरूपा शुचिवासा जयावहा ॥ १२१॥

जानकी जन्यजनका जनतोषणतत्परा ।

वादप्रिया वाद्यरता वादिनी वादसुन्दरी ॥ १२२॥  var  वादिता वादसुन्दरी

वाक्स्तम्भिनी कीरपाणिः धीराधीरा धुरन्धरा ।  var  वाक्स्तम्भिनी कीरवाणी

स्तनन्धयी सामिधेनी निरानन्दा निरञ्जना ॥ १२३॥  var  निरानन्दा निरालया

समस्तसुखदा सारा वारान्निधिवरप्रदा ।

वालुका वीरपानेष्टा वसुधात्री वसुप्रिया ॥ १२४ ।

शुकानान्दा शुक्ररसा शुक्रपूज्या शुकप्रिया ।

शुचिश्च शुकहस्ता च समस्तनरकान्तका ॥ १२५॥  var  शुकी च शुकहस्ता च

समस्ततत्त्वनिलया भगरूपा भगेश्वरी ।

भगबिम्बा भगाहृद्या भगलिङ्गस्वरूपिणी ॥ १२६॥

भगलिङ्गेश्वरी श्रीदा भगलिङ्गामृतस्रवा ।

क्षीराशना क्षीररुचिः आज्यपानपरायणा ॥ १२७॥

मधुपानपरा प्रौढा पीवरांसा परावरा ।

पिलम्पिला पटोलेशा पाटलारुणलोचना ॥ १२८॥

क्षीराम्बुधिप्रिया क्षिप्रा सरला सरलायुधा ।

सङ्ग्रामा सुनया स्रस्ता संसृतिः सनकेश्वरी ॥ १२९॥

कन्या कनकरेखा च कान्यकुब्जनिवासिनी ।

काञ्चनोभतनुः काष्ठा कुष्ठरोगनिवारिणी ॥ १३०॥

कठोरमूर्धजा कुन्ती कृन्तायुधधरा धृतिः ।

चर्माम्बरा क्रूरनखा चकोराक्षी चतुर्भुजा ॥ १३१॥

चतुर्वेदप्रिया चाद्या चतुर्वर्गफलप्रदा ।

ब्रह्माण्डचारिणी स्फुर्तिः ब्रह्माणी ब्रह्मसम्मता ॥ १३२॥

सत्कारकारिणी सूतिः सूतिका लतिकालया (९००)

कल्पवल्ली कृशाङ्गी च कल्पपादपवासिनी ॥ १३३॥

कल्पपाशा महाविद्या विद्याराज्ञी सुखाश्रया ।

भूतिराज्ञी विश्वराज्ञी लोकराज्ञी शिवाश्रया ॥ १३४॥

ब्रह्मराज्ञी विष्णुराज्ञी रुद्रराज्ञी जटाश्रया ।

नागराज्ञी वंशराज्ञी वीरराज्ञी रजःप्रिया ॥ १३५॥

सत्त्वराज्ञी तमोराज्ञी गणराज्ञी चलाचला ।

वसुराज्ञी सत्यराज्ञी तपोराज्ञी जपप्रिया ॥ १३६॥

मन्त्रराज्ञी वेदराज्ञी तन्त्रराज्ञी श्रुतिप्रिया ।

वेदराज्ञी मन्त्रिराज्ञी दैत्यराज्ञी दयाकरा ॥ १३७॥

कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया ।

पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा ॥ १३८॥

सुधाराज्ञी सुराराज्ञी भीमराज्ञी भयोज्झिता ।

तथ्यराज्ञी जयाराज्ञी महाराज्ञी महामत्तिः ॥ १३९॥ var महाराज्ञी कुलोकृतिः

वामराज्ञी चीनराज्ञी हरिराज्ञी हरीश्वरी ।

पराराज्ञी यक्षराज्ञी भूतराज्ञी शिवाश्रया ॥ १४०॥ var भूतराज्ञी शिवासना

वटुराज्ञी प्रेतराज्ञी शेषराज्ञी शमप्रदा । var बहुराज्ञी प्रेतराज्ञी

आकाशराज्ञी राजेशी राजराज्ञी रतिप्रिया ॥ १४१॥

पातालराज्ञी भूराज्ञी प्रेतराज्ञी विषापहा ।

सिद्धराज्ञी विभाराज्ञी तेजोराज्ञी विभामयी ॥ १४२॥

भास्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी सुवासिनी ।

गृहराज्ञी वृक्षराज्ञी लताराज्ञी मतिप्रदा ॥ १४३॥

वीरराज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी । var धीरराज्ञी मनोराज्ञी

मुनिराज्ञी रत्नराज्ञी मृगराज्ञी मणिप्रभा ॥ १४४॥ var युगराज्ञी मणिप्रभा

सिन्धुराज्ञी नदीराज्ञी नदराज्ञी दरीस्थिता ।

नादराज्ञी बिन्दुराज्ञी आत्मराज्ञी च सद्गतिः ॥ १४५॥

पुत्रराज्ञी ध्यानराज्ञी लयराज्ञी सदेश्वरी ।

ईशानराज्ञी राजेशी स्वाहाराज्ञी महत्तरा ॥ १४६॥

वह्निराज्ञी योगिराज्ञी यज्ञराज्ञी चिदाकृतिः ।

जगद्राज्ञी तत्त्वराज्ञी वाग्राज्ञी विश्वरूपिणी ॥ १४७॥

पञ्चदशाक्षरीराज्ञी ॐ ह्रीं भूतेश्वरेश्वरी । ( १००० )

इतीदं मन्त्रसर्वस्वं राज्ञीनामसहस्रकम् ॥ १४८॥

पञ्चदशाक्षरीतत्त्वं मन्त्रसारं मनुप्रियम् ।

सर्वतत्त्वमयं पुण्यं महापातकनाशनम् ॥ १४९॥

सर्वसिद्धिप्रदं लोके सर्वरोगनिबर्हणम् ।

सर्वोत्पातप्रशमनं ग्रहशान्तिकरं शुभम् ॥ १५०॥

सर्वदेवप्रियं प्राज्यं सर्वशत्रुभयापहम् ।

सर्वदुःखौघशमनं सर्वशोकविनाशनम् ॥ १५१॥

पठेद्वा पाठयेत् नाम्नां सहस्रं शक्तिसन्निधौ ।

दूरादेव पलायन्ते विपदः शत्रुभीतयः ॥ १५२॥

राक्षसा भूतवेतालाः पन्नगा हरिणद्विषः ।

पठनाद्विद्रवन्त्याशु महाकालादिव प्रजाः ॥ १५३॥

श्रवणात्पातकं नश्येच्छ्रावयेद्यः स भाग्यवान् ।

नानाविधानि भोगानि सम्भूय पृथिवीतले॥ १५४॥

गमिष्यति परां भूमिं त्वरितं नात्र संशयः ।

NOTE: The following verses (155-175) are not found

in S V Radhakrishna Sastri's Book

अश्वमेधसहस्रस्य वाजिपेयस्य कोटयः ।

गङ्गास्नानसहस्रस्य चान्द्रायणायुतस्य च ॥ १५५॥

तप्तकृच्छ्रैकलक्षस्य राजसूयस्य कोटयः ।

सहस्रनामपाठस्य कलां नार्हन्ति षोडशीम् ॥ १५६॥

सर्वसिद्धीश्वरं साध्यं राज्ञीनामसहस्रकम् ।

मन्त्रगर्भं पठेद्यस्तु राज्यकामो महेश्वरि ॥ १५७॥

वर्षमेकं शतावर्तं महाचीनक्रमाकुलः ।

शक्रिपूजापरो रात्रौ स लभेद्राज्यमीश्वरि ॥ १५८॥

पुत्रकामी पठेत्सायं चिताभस्मानुलेपनः ।
दिगम्बरो मुक्तकेशः शतावर्तं महेश्वरि ॥ १५९॥

श्मशाने तु लभेत्पुत्रं साक्षाद्वैश्रवणोपमम् ।
परदारार्चनरतो भगबिम्बं स्मरन् सुधीः ॥ १६०॥

पठेन्नामसहस्रं तु वसुकामी लभेद्धनम् ।
रवौ वारत्रयं देवि पठेन्नामसहस्रकम् ॥ १६१॥

मृदुविष्टरनिर्विष्टः क्षीरपानपरायणः ।
स्वप्ने सिंहासनां राज्ञीं वरदां भुवि पश्यति ॥ १६२॥

क्षीरचर्वणसन्तृप्तो वीरपानरसाकुलः ।
यः पठेत्परया भक्त्या राज्ञीनामसहस्रकम् ॥ १६३॥

स सद्यो मुच्यते घोरान्महापातकजाद्भयात् ।
यः पठेत्साधको भक्त्या शक्तिवक्षःकृतासनः ॥ १६४॥

शुक्रोत्तरणकाले तु तस्य हस्तेऽष्टसिद्धयः ।
यः पठेन्निशि चक्राग्रे परस्त्रीध्यानतत्परः ॥ १६५॥

सुरासवरसानन्दी स लभेत्संयुगे जयम् ।
इदं नामसहस्रं तु सर्वमन्त्रमयं शिवे ॥ १६६॥

भूर्जत्वचि लिखेद्रात्रौ चक्रार्चनसमागमे ।
अष्टगन्धेन पूतेन वेष्टयेत् स्वर्णपत्रके ॥ १६७॥

धारयेत् कण्ठदेशे तु सर्वसिद्धिः प्रजायते ।
यो धारयेन्महारक्षां सर्वदेवातिदुर्लभाम् ॥ १६८॥

रणे राजकुले द्यूते चौररोगाद्युपद्रवे ।
स प्राप्नोति जयं सद्यः साधको वीरनायकः ॥ १६९॥

श्रीचक्रं पूजयेद्यस्तु धारयेद्वर्म मस्तके ।
पठेन्नामसहस्रं तु स्तोत्रं मन्त्रात्मकं तथा ॥ १७०॥

किं किं न लभते कामं देवानामपि दुर्लभम् ।
सुरापानं ततः संविच्चर्वणं मीनमांसकम् ॥ १७१॥

नवकन्यासमायोगो मुद्रा वीणारवः प्रिये ।
सत्सङ्गो गुरुसान्निध्यं राज्ञीश्रीचक्रमग्रतः ॥ १७२॥

यस्य देवि स एव स्याद्योगी ब्रह्मविदीश्वरः ।
इदं रहस्यं परमं भक्त्या तव मयोदितम् ॥ १७२॥

अप्रकाश्यमदातव्यं न देयं यस्य कस्यचित् ।

अन्यशिष्याय दुष्टाय दुर्जनाय दुरात्मने ॥ १७४॥

गुरुभक्तिविहीनाय सुरास्त्रीनिन्दकाय च ।

नास्तिकाय कुशीलाय न देयं तत्त्वदर्शिभिः ॥ १७५॥

NOTE: S V Radhakrishna Sastri's Book continues with the following:

देयं शिष्याय शान्ताय भक्तायाद्वैतवादिने ।

दीक्षिताय कुलीनाय राज्ञीभक्तिरताय च ॥ १७६॥

दत्त्वा भोगापवर्गे च लभेत्साधकसत्तमः ।

इति नामसहस्रं तु राज्ञ्याः शिवमुखोदितम् ।

अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत् ॥ १७७॥

अष्टाविंशतिनैजमान्यमुनिभिः भाव्यां महायोगिभिः

श्रीवाणीकरवीजितां सुमकुटां श्रीचक्रबिन्दुस्थितां ।

पञ्चब्रह्मसुतत्वमञ्चनिलयां साम्राज्यसिद्धिप्रदां

श्रीसिंहासनसुन्दरीं भगवतीं राजेश्वरीमाश्रये ॥ १॥

श्वेतछत्रसुवालवीजननुता मालाकिरीटोज्ज्वला

सन्मन्दस्मितसुन्दरी शशिधरा ताम्बूलपूर्णानना ।

श्रीसिंहासनसंस्थिता सुमशरा श्रीवीरवर्यासना

साम्राज्ञी मनुषोडशी भगवती मां पातु राजेश्वरी ॥ २॥

॥ इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये

श्रीमहाराज्ञीसहस्रनामस्तोत्रम् समाप्तम् ॥